वादेशेति इन् अस्य च लोपः **दीर्घो लघोः** लघुन्यन्ते
परेऽभ्यासस्य लघोर्दीर्घो भवति इनि चण् परे परतः अचू
चुरत् चुर स्तेये वृद्धादेशेति इन् उपधायाह्रस्वः दि चण् चु
र् द्विर्वचनं कारितलोपः अन्यसमानेति ह्रस्वः अनेनाभ्यास
स्य दीर्घः **अत्वरादीनां च** त्वरा संभ्रमे प्रथ प्रख्या
ने म्रद मर्दने स्पश बाधनस्पर्शनयोः स्मृ चिन्तायाम् दॄ
विदारणे स्तॄञ् आच्छादने एषामभ्यासस्य अकारादेशो भ
वति इनि चण् परे परतः अकारस्य च अकारः सन्यवर्णस्ये
ति इत्वबाधनार्थः अतत्वरत् अपप्रथत् अमम्रदत् अ
पस्पशत् असस्मरत् अददरत् अतस्तरत् त्वरमा
णं प्रयुङ्क्ते प्रथमानं म्रदमानं स्पशमानं स्मरन्तं दृणन्तं
स्तृणन्तं इन् दि चण् कारितलोपः अन्यसमानेति ह्रस्वः
त्वरप्रथप्रदामान्वन्यानां ह्रस्वः अनेनाभ्यासस्य अत्वम्
स्पशोः स्तृणाते श्च शिङ्रो लोपः **गणेरीच** गण सं
ख्याने इत्यस्य इनि चण् परे परतः अभ्यासस्य अकारो भ
वति ईकारश्च अजगणत् अजीगणत् वृद्धादेशेति इन्
अस्य च लोपः दि चण् द्विर्वचनं अनेन अकार ईकारौ **इ**
**तो लोपोऽभ्यासस्य** इत उत्तरं यदुक्तं तत्राभ्यास
स्य लोपो भवति इत्यधिक्रियते आपादपरिसमाप्तेरयम
धिकारः **सनि मीमाघुरभलभशकपतपदा**
**मिस्स्वरस्य** मी इति मीञ् हिंसायां डुमिञ् प्रक्षेपणे।
इति वा मा इति मा माने माङ् माने मीञ् प्रणिधाने इति
वा दा इति दासंज्ञकाः रभ राभस्ये डुलभष् प्राप्तौ पा

ऋधाञ्जो पत्लृगतौ पदगतौ एषां स्वरस्य स्थाने इस् आ
देशो भवति अभ्यासलोपश्च सनि परे मित्सति मित्सते
दित्सति धित्सते आरिप्सते अचोधेश्रणमइति भस्य पः
लिप्सते शीक्षति पित्सति पित्सते मातुमिच्छति दातुं धा
तुं रब्धुं लब्धुं शक्तुं पतितुं पत्तुं धातोर्वेति सन् द्विर्व
अनेन स्वरस्य इस् अभ्यासस्य च लोपः मीमादाइत्यनेनेषां स
स्य से सार्वधातुकेन इति सस्य तः अन्यत्र स्कोः संयोगाद्योरा
न्ते चेति सलोपः **आप्नोतेरी** आप्लृ व्याप्तावित्यस्य सनि
परे स्वरस्य ईत्वं भवति अभ्यासलोपश्च ईप्सति आप्तुमिच्छ
ति सन् अनेन आकारस्य ईत्वम् अभ्यासलोपश्च **दम्भे**
**रिच्च** दम्भ दम्भे इत्यस्य सनि परे स्वरस्य इत्वं भवति चश
ब्दात् ईत्वं च धिप्सति धीप्सति दम्भितुमिच्छति सन् दम्भे
रनिटि सनि अत्र बङ्लोपः अनेनाकारस्य इत्वं ईत्वं च ।
अभ्यासलोपश्च तृतीयादेर्घढधभान्तस्येति दस्य धः अ
चो धेश्च षिटामिति भस्य पः अस्यापि शाम्भवत् इत्यत्र इत्वे
ईत्वे च अभ्यासलोपश्च नेष्यते दिदम्भिषति **दिगि दय**
**तेः परोक्षायाम्** देङ् रक्षणे इत्यस्य परोक्षायां परस्यां
दिगि आदेशो भवति अभ्यासलोपश्च दिग्ये दिग्याते दि
ग्यिरे यङ्वर्णस्येति यः **इति लघुवृत्तावाख्यातप्रक**
**रणो द्विर्वचनपादस्तृतीयः ३ ओं सपरस्वरायाः**
**संप्रसारणमन्तस्थायाः** अधिकारोऽयम् इत उत्तरं य
द्वक्ष्यामस्तत्र परस्वरसहिताया अन्तस्थायाः संप्रसारणं भव
तीत्यधिक्रियते सन्ध्यक्षरान्तानामाकारो विकरणे इत्यतः ।

आगमाधिकारः **ग्रहिज्यावयिव्यधिवष्टिव्यचिवृश्चिप्रच्छि भ्रस्जीनामगुणे** ग्रह उपादाने ज्या वयोहानौ वेञ् त न्तुसन्ताने वेञो वयिः व्यध ताडने वश कान्तौ व्यच सम्भवे। प्रच्छ ज्ञीप्सायाम् ओव्रश्चू छेदने भ्रस्ज पाके एषामन्तस्थायाः सस्वरायाः संप्रसारणं भवति अगुणे प्रत्यये परे गृह्यते। जीयते सार्वधातुके यण् अनेन संप्र नाम्यन्तानां यस्यायी ति दीर्घः उयतुः उयुः वेञ् तन्तुसन्ताने अनस् उस् वे ञो वयिः संप्र द्विर्व विध्यते उच्यते विच्यते वृश्च्यते पृ च्छ्यते भृज्ज्यते यण् संप्र भ्रस्जः भृटोऽन्तीय इति सस्पदः नस्य न वर्गस्थटेतिजः जरीगृह्यते जेज्ञीयते वेवीयते वेविध्यते वे विच्यते परीपृच्छ्यते वरीवृश्च्यते बरीभृज्ज्यते अन्यत्र गृ ह्णाति जिनाति विध्यति विचति पृच्छति वृश्चति भृज्ज ति धातोरेकस्वरेति यणादेः अनेन संप्र द्विर्व ऋमतोरीअ कारस्य वर्णस्य अन्यत्र गुणश्चेकीयिते इति गुणः **स्वपिव चियजादीनां यण्परोक्षाशीष्षु** ञिष्वप् शयने वच भाषणे अनयोः तथा यजादीनां यज देवतापूजासङ्ग तिकरणदानेषु टुवप बीजसन्ताने वह प्रापणे वेञ् त न्तुसन्ताने वेञ् संवरणे ह्वेञ् स्पर्धायां शब्दे च वद व्यक्ता यां वाचि वस निवासे टुओश्वि गतिवृद्ध्योः एषां यान्तस्था याः सस्वरायाः संप्रसारणं भवति यणि परोक्षायां आ शिषि च गुणाभावपरतः सुप्यते उच्यते इज्यते उप्यते उह्य ते ऊयते संवीयते आहूयते उद्यते उष्यते शूयते ये यण् अनेन संप्र नाम्यन्तानां यस्यायीति दीर्घः परोक्षायाम्॥

सुषुपतुः सुषुपुः ऊचतुः ऊचुः ईजतुः ईजुः ऊपतुः ऊपुः ऊदतुः ऊदुः संविव्यतुः संविव्युः जुहुवतुः जुहुवुः । ऊ दतुः ऊतुः ऊषतुः ऊषुः आशस् उस् संप्र हिर्वे ह्वेञः सन्ध्यक्षरान्तानामाकारः स्वरादाविवर्णोत्वम् यवेःद्वा सिवतीति सस्यघः श्वेञः यश्वर्णस्येति यः आशिषि स्वप्यात् उच्यात् इज्यात् उप्यात् उद्यात् ऊयात् संवीयात् आहूयात् उयात् उष्यात् ष्यूयात् आशीर्यात् संप्रनाम्यन्तानां यस्याधीतिदीर्घः आशिषि चपरस्मैइतिगुणाभावः **परोक्षायामभ्यासस्योभयेषाम्** उभयेषांयहादीनां । स्वपादीनांचपरोक्षायांपरस्मै अभ्यासस्यसंप्रसारणंभवति सम्प्रसारणेवचनम् जिज्यौ उवाय विव्याय उवाथ विव्याच वव्रश्च सुष्वाप उवाच इयाज उवाप उवाद विव्याय उवाद उवास अट् अभ्यासस्यसंप्र जिनातेः आकारादटौ सन्ध्यक्षरेचेत्यालोपः श्वेञोनव्ययतेः परोक्षायामित्यात्वंनभवति सन्ध्यक्षरान्तानामित्यात्वप्राप्तम् अर्थायचेर्मिवृद्धिः अभ्यासपादीर्घः **श्वयतेश्च** अथभयचलनयोरित्यस्यपरोक्षायांपरस्मैसस्यसंप्रसारणंभवति विव्यथे विव्यथाते विव्यथिरे अभ्यो अनेनाभ्यासस्यसंप्र **नवेञ्श्वोरगुणेच** वेञ् तन्तुसन्ताने कुञोस्मिन्नातिहृद्ध्यो। अनयोः परोक्षायामगुणे सगुणेऽवाऽन्यये परेसंप्रसारणंनभवति ववौ ववतुः ववुः श्विश्वाय शिश्वियतुः शिश्वियुः **स्वपिस्यमिव्येञांयेक्रीयिते** निषम् श्रायनेस्यमस्वनशब्दे व्येञ् संवरणे एषां चेक्रीयिते परेसंप्रसारणंभवति सोषुप्यते सेसिम्यते वे।

वीयते अत्यर्थं स्वपिति स्वमीति व्ययति यथाह्वः अनेनसंप्रा
द्विर्वे गुणश्चेक्रीयिते स्वपेःषत्वम् सेऽोनाम्यन्तानांयस्मा
यीतिदीर्घः स्वापेश्चणि स्वपेरिन्नन्ताच्चणिपरे अन्तःस्था
याःसंप्रसारणंभवति असूषुपत् स्वपन्तंप्रायुङ्क्त इन् अ
स्वापयेतिदीर्घादिचणे अनेनसंप्रकारितलोपः द्विर्वदी
र्घोलघोः अड्धातुादिः ग्रहिस्वापिप्रच्छांसनि ग्रहउपा
दा निषुश्वायते प्रच्छीप्सायाम् एषांसनि
परे अन्तस्थायाःसंप्रसारणंभवति जिघृक्षति सुषुप्सति।
पिपृच्छिषति गृहीतुमिच्छति स्वप्तुम् प्रष्टुम् धातोर्वा
तिसन् संप्रश्नोढः तृतीयादेर्घढधभान्तस्यातिगस्यचः द्वि
र्वत्रग्रहगुहोःसनीतिइडभावः सिद्धम् ज्वरत्वरइतिइट् चा
यःकीचेक्रीयिते चायपूजानिशामनयोरित्यस्य चा
कीयितेपरे कीआदेशोभवति चेकीयते अत्यर्थंचायते
इति यथाह्वः अनेनकीआदेशः द्विर्वे गुणश्चेक्रीयिते
इतिगुणः चेक्रीयितेइतिकिम् चायते प्यायःपीपरो
क्षायाम् चेक्रीयितग्रहणमनुवर्तते स्फायीओप्यायीवृ
द्धावित्यस्य परोक्षायांपरतः पीआदेशोभवति पेपीयते
अत्यर्थंप्यायते यथाह्वः अनेनपीआदेशः द्विर्वेगुणश्चेक्री
यिते आपिप्ये आपिप्याते आपिप्यिरे अनेनपीआदेशःद्विर्वेह्रस्वःय
इवर्णस्येतियः परोक्षायामितिकिम् प्यायते श्वयतेर्वा
टुओश्विगतिवृद्ध्योरित्यस्य चेक्रीयितपरोक्षयोः परयोः संप्र
सारणंवाभवति शोशूयते शेश्वीयते अत्यर्थंश्वयति य
थाह्वः अनेनवासंप्र द्विर्वे शुशाव शुशुवतुः शुशुवुः शि

श्वाय शिश्वियतुः शिश्वियुः अदिह्वद्विः स्वरादाविवर्णोति उ
श्वेत् **कारिते च संयुणोः** श्वयतेर्वा श्यायाः संप्रसारणं
वा भवति कारिते सन्परे च णपरे च परतः शुशावयिषति श्वय
न्तं प्रयोक्तुमिच्छति इन् सन् संप्र इट् वृद्धिः इनि कृते स्थानिव
दिति शुद्विर्वे पक्षे शिश्वाययिषति इन् सन् इट् वृद्धिः शि
श्वं प्राग्वत् अशूशवत् श्वयन्तं प्रायुक्त इन् दि चण् संप्र
वृद्धिः कारितलोपः शु द्विर्वे इत्यसमानेतिह्रस्वः अभ्यास
स्य दीर्घो लघोः पक्षे अशिश्वयत् इनि कृते स्थानिवदिति १
श्वि द्विर्वे इत्यसमानेतिह्रस्वः **ह्वयतेर्नित्यम्** ह्वेञ् स्पर्धा
यामित्यस्य नित्यं संप्रसारणं भवति कारिते सन्परे चण्परे
च परतः जुहावयिषति ह्वयन्तं प्रयोक्तुमिच्छति इन् स
न् इट् अनेन आदेः संप्रततो वृद्धिः इनि कृते स्थानिवदिति
हु द्विर्वे हेजः नामन्तयोरितिगुणः अजूहवत् ह्वयन्तं
प्रायुक्त इन् दि चण् संप्र वृद्धिः कारितलोपः प्राग्वत् हु
द्विर्वे इत्यसमानेतिह्रस्वः दीर्घो लघोः **अभ्यस्तस्य च**
ह्वयतेरभ्यस्तस्य नित्यं संप्रसारणं भवति जुहाव अह्वि
र्वे अनेन ह्वयोरपि धात्वभ्यासयोः संप्रसारणं धातोरस्योप
धेति वृद्धिः जुहूषति ह्वातुमिच्छति सन् द्विर्वे अनेन ह्वयो
रपि संप्र स्वरान्तानां सनीति दीर्घः जोहूयते अत्यर्थं ह्वय
ति यशाद्वः द्विर्वे अनेन ह्वयोः संप्रसारणं द्वेक्रीयिते नाम्य
न्तानां यण्यायीतिदीर्घः **द्युतिस्वाप्योरभ्यासस्य** द्युत
दीप्तौ ञिष्वप् शये अनयोरिन्नतयोर्योभ्यासः तस्य संप्र
सारणं भवति दिद्युते परोक्षा ए द्विर्वे अनेन संप्र दिद्यो

ति  धते धोतितुमिच्छति सन् द्विर्वं संप्र इट् धंसउपा
धागुणः देधूत्रते अभ्यर्थयोत्यते यथाह्नः द्विर्वं संप्रयता।
श्चेक्रीयिते अदिद्युतत् योतमानेप्रायुङ्क्त इन् उपधागुणः
दिद्युत् कारितलोपः द्युत् द्विर्वं संप्र इत्यसमानेतिह्रस्वः।
स्वापेःस्वल्वपि सुषापयिषति स्वपन्तंप्रयोक्तुमिच्छति इन्।
सन् इट् असोपधेतिदीर्घः स्वप् द्विर्वं अनेनाभ्यासस्यसं
प्र धर्वे. अभ्यासस्येतिकिम् योनते स्वापयति **न संप्रसा**
**रणेसंप्रसारणम्** संप्रसारणेकृतेपुनः संप्रसारणंन
भवति विध्यते विव्यते अपताडने अवसंभवे ते यत्र्
द्विर्वेतिसंप्रसारणेकृते पुनर्नभवति **वशोश्चेक्रीयि**
**ते** वशाकान्ताविन्यस्यचेक्रीयितेपरेसंप्रसारणंनभव
ति वावश्यते अभ्यर्थंवष्टि यथाह्नःद्विर्वंदीर्घोनागमेति
दीर्घः चेक्रीयिते इतिकिम् उशान्ति अन्ति अन्वि लुक्च
हज्येतिसंप्र **प्रच्छादीनांपरोक्षायाम्** प्रच्छिभ्रस्जि
भ्र स्जां परोक्षायांपरस्मैसंप्रसारणंनभवति प्राड्
ज्यावयीतिप्राप्तम् पप्रच्छतुः पप्रच्छुः बभ्रज्जतुः बभ्र
ज्जुः बभ्रज्जतुः बभ्रज्जुः भुटांत्ततीयइतिसस्यदः तस्य
तवर्गश्चठेतिजः **सन्ध्यक्षराणामाकारोविक**
**रणे** सन्ध्यक्षरान्तानांधातूनामन्त्यस्य आकारोभव
ति अविकरणे विकरणेतुनभवति दाता देङ् रक्षणे
दैपृ शोधने दोअवखण्डने अनेनआत्वम् अविकर
णेइतिकिम् दयते दायति ते ति अन्वि प अपृ पेयाद्
**नव्ययतेःपरोक्षायाम्** ओञ् संवरणेइत्यस्यपरो

ज्ञायांपरस्मा अभ्यासस्य आत्वंनभवति विमाय विमयिथ
थ अट् थल् ओर्द्वित्वे परोक्षायामभ्यासस्येतिसमस्य अटिवृ
द्धिः पेमाय पमय परोक्षायामितिकिम् माता **मीनाति**
**मिनोतिदीङांगुणवृद्धिस्थाने** मीञ्हिंसायां डुमिञ्
प्रक्षेपणे दीङ्क्षये एषामन्तस्य आत्वंभवति गुणवृद्धि
स्थानेप्रत्ययेपरे माता मास्यति दाता दास्यते अप्रमीता
भविष्यन्ती स्यति स्यते अनेनआत्वं अन्तरङ्गाःशासः वृ
द्धिस्थाने मापयति दापयति मीनन्तंप्रयुङ्क्ते एवंमिन्वन्तं
दीयमानंप्रयुङ्क्ते इन् अनेनआत्वम् अर्तिह्रीव्लीतिपागमः
अनेनवृद्धिः आआगुणवृद्धिस्थानेइतिकिम् मीनातिमि
नोति दीयते नाम्यादेः श्नःस्वादेः दिवादेर्यन् अनिच
विकरणोइतिनियमाद्गुणाभावः **सनिचदीङः** दीङ्क्ष
ये इत्यस्यसनिपरेआत्वंभवति अगुणत्वाद्वृद्धेरनाप्तिसि
द्धिः उपदिदासते उपदात्स मित्सति सन् अनेन आत्वं द्वि
र्वे सन्यवर्णस्येति इत्वम् सनीतिकिम् उपदेदीयते अ
र्थंदीयते यङागमः **स्मिजिक्रीङामिनि** ष्मिङ् ईषद्
हसने जिजये डुक्रीञ् द्रव्यविनिमये इङ् अध्ययने ए
षामन्तस्य आत्वंभवति इनिपरे विस्मापयते विजापय
ते विक्रापयते अध्यापयते विस्मयमानंप्रयुङ्क्ते एवंवि
जयमानं विक्रीणानं अधीयानं इन् अनेन आत्वम्
अर्तिह्रीतिपागमः इनीतिकिम् विक्रेता विजेता वि
स्मयिता **स्फातिस्फोराणामोकारःस्वरान्तरोत्र**
**दिगुणवृद्धिस्थाने** स्फूर्जविसर्गे हविर्ष्वेलने अन

धोः स्वरात्परः अकारागमो भवति गुणवृद्धिस्थाने झला
दौप्रत्ययेपरे स्रष्टा स्रक्ष्यति अस्रक्ष्यत् द्रष्टा द्रक्ष्यति अ
द्रक्ष्यत् नास्यति स्यत् अनेन आकारागमः रत्वं भ्रस्जा
दीनां षइति जस्य षः छशोश्चेति शस्य षः षढोः कस्सि इति
षस्य कः वृद्धिस्थाने अस्राक्षीत् अद्राक्षीत् अथ यदि सिच्
अकारागमः रत्वम् अस्य च दीर्घः सिचइतीट् गुणवृद्धि
स्थाने इति किम् सृष्टः सृष्टवान् दृष्टः दृष्टवान् निष्ठे
ति क्तः क्तवत् यणवृद्धावादगुणत्वम् तवर्गस्य षटेति
तस्य टः **दीङोयोऽन्तः स्वरादावगुणे** दीङ् क्षये इत्य
स्य स्वरादावगुणेपरे यकारागमो भवति उपदिदीये उ
पदिदीयाते उपदिदीयिरे परोक्षा प आते इरे द्विर्व ह्र
स्वः अनेन यकारागमः अगुणे इति किम् दानम् युद्धेति
युट् युङ् कामना कान्त्या इत्यनादेशः मीनाति मिनोति दी
नामित्यत्वम् **आलोपोऽसार्वधातुके** धातोराका
रस्य लोपो भवति स्वरादावगुणेऽसार्वधातुकेपरे पप
तुः पपुः पारोक्षे अतुस् उस् द्वित्वं अनेनालोपः असा
र्वधातुकेइति किम् यान्ति अन्ति अन्वि लङ् **इटि च** आ।
कारस्य लोपो भवति इटिपरे पपिथ ययिथ पारोक्षे।
याप्रापतौ थल् लकारः थालि च सेटीत्यर्थः इट् अनेना-
कारलोपः **दामागायतिपिबतिस्थास्यतिजहा**
**तीनामीकारो व्यञ्जनादौ** दाइति दासंज्ञकाग्रह
णे माइति मामाने माङ् माने मेङ् प्रणिधाने गायती
ति कैगैशब्दे गाङ् गतावितिवा पापाने ष्ठागतिनिवृत्तौ।

घोश्रन्तक र्मणि ङोहाकृत्यागे प्यांश्रञ्जनादावः सार्वधात्
के श्रगुणेपरे श्रन्त्यस्यईकारोभवति दीयते धीयते मीयते
गीयते श्रध्यगीष्ट पीयते स्थीयते श्रवसीयते हीयते इङः
श्रध्यायने श्रपिपूर्वः श्रयतनी त विभाषास्तुङ्रीः ति तन्त्रा
न्तरात् गाङादेशः तस्यानेनईत्वम् श्रन्यत्र तयङ् श्रनेना
कारस्यईत्वम् देदीयते देधीयते मेमीयते जेगीयते पे
पीयते तेष्ठीयते श्रवसेषीयते जेहीयते श्रत्यर्थंददाति
दधाति माति मीमीते मयते गायति गाते पिबति ति
ष्ठति श्रवस्यति जहाति यङाङ्ः श्रनेनईत्वम् द्विर्व श्रल्
स्येष्ठीयिते श्थोभ्यासस्य शिट्परोघोषः निमित्ताभ्रत्यये
तिसस्यघः तवर्गस्य षटेतिथस्यठः श्रगुणेइतिकिम् दा
ताश्रासार्वधात्केइतिकिम् गाते श्राशिष्येकारः
दादीनामन्त्यस्य एकारोभवति श्राशिषि श्रगुणेयपर
तः देयात् धेयात् मेयात् गेयात् पेयात् स्थेयात् श्रव
सेयात् हेयात् श्राशीर्यात् श्रनेनाकारस्यएकारः श्रगुण
यामितिकिम् दासीष्ट श्रनउस्सिजभ्यस्तविदाभ्यो
भुवः सिचः श्रभ्यस्तात् विदः श्राकारान्ताद्धातोःपर
स्य श्रनः श्रप्रत्ययस्यउसादेशोभवति श्रभुवः भुवः पर
स्मात् सिचःपरमश्रप्यंवर्जयित्वा सिचः श्रकार्षुः श्रला
विषुः श्रभैत्सुः कृञ् लूञ् भिद् श्रन् सिच् लूल्इट् कृञ
श्रतोहृल्न इतिइउभावः भिदस्तदिभिदीति इउभावः सि
चिपरस्माइतिवृद्धिः श्रनेनश्रनउस् श्रघोषेश्ि शिटामि
ति दस्यतः श्रभ्यस्तात् श्रविभयुः श्रजागरुः जिभीभये

जागरनिद्राक्षये अनि तु लङ् भियोऽन्त्यदो त्यादेश्चेति लक् द्वित्वं जाग्रोऽदादेर्लङ् अनउस् अयपस्यानाऽसीति गुणः विदः अविदुः विद् अन् अवि लङ् अन उस् आकारान्तात् अगुः अदुः यापायतौ दादाने ख्यस्तनी अन् अवि लङ् अनउस् आकारस्यो सीत्यालोपः सर्वत्राद्यात्वादिः अभूवइतिकिम् अभूवन् भूसत्तायां अद्यतनी अन् सिच् इस्त्यादावपिवनीति सिज्लोपः भुवोवोन्तइतिवकारागमः इचस्तलोपः इचः परस्यतप्रत्ययस्यलोपोभवति अकारि अपाठि कृञ्पठ् अद्यतन्यात्मनेपदं त भावकर्मणोश्चेतीच् अस्योपधेतिदीर्घः अनेनतलोपः चकारश्चार्थः अद्यात्वादिः हेरकारा दहन्तेः अकारान्तात्परस्यहेर्लोपोभवति अहन्तेः हन्तहिस्ता गतोरित्यस्मात्परस्य हेर्लोपोनभवतीत्यर्थः पच पठ पञ्चमी हि अवि अनेनहिलोपः अहन्तेरितिकिम् जहि हन् हि अ न्वि लङ् हन्तेर्जहाविति हन्तेर्जः नोर्वाविकरणादसंयोगात् असंयोगात् अरेनवर्णानाऽसंयुक्तात् नोर्विकरणात्परस्यहेर्लोपोभवति चिनु स्तृ चिञ् चये कर सुनु अभिषवेहि उःस्वादेः अनेनहिलोपः असंयोगादिति किम् राध्नुहि तनुहि राधसाधसंसिद्धौ तनुविस्तारे तनूकरणे हिविकरणः नोर्विकरणादितिकिम् जुहि एउस्तनोऽयोनः हि अवि लङ् उकाराच्च उकाराच्च विकरणात्परस्यहेर्लोपोभवति कुरु तनु कृञ् तनुविस्तारे हि तनादेकः करोतेरिति कृञोगुणः अस्योकारः विकरणादितिकिम् धुहि धुनि धुणो हि अवि लङ् उकारलोपोवामोर्वा उकारलोपोवाभवति वकारमकार

योःपरयोः सन्वः सनुवः सन्मः सनुमः तन्वः तनुवः तन्मः तनुमः अनेनवाउकारलोपः असंयुक्तस्येतिकिम् आप्नुवः आप्नुमः **करोतेर्नित्यम्** कृञःपरस्यविकरणस्यलोपोभवति कुर्वः कुर्मः वस् मस् अनेनउपकारलोपः **सप्तम्यांयेच** करोतेःसप्तम्यांयकारेपरे उकारलोपोभवति कुर्यात् कुर्याताम् कुर्युः सप्तमीयात् यातास् युस् अनेनउपकारलोपः येइतिकिम् कुर्वीतसप्तमीईत **अस्योकारःसार्वधातुकेऽगुणे** करोतेरकारस्य उकारादेशोभवति अगुणे सार्वधातुकेपरे कुरुतः कुर्यात् कुरुताम् अकुरुत कुर्वर्तमानातस् सप्तमीयात् पञ्चमीताम् ह्यस्तनीत उनादेशः करोतेरितिगुणः द्विवचनबहुवचनयोश्चपरस्मैइतिगुणाभावः अनेनअकारस्यउकारः अगुणेइतिकिम् करोति **रुधादेर्विकरणान्नलोपः** रुधादेर्गणस्ययोविकरणः स्वरात्परो नशब्दस्तस्य अन्तलोपोभवति अगुणेसार्वधातुकेपरे रुन्धः रुन्धन्ति रुन्ध्यात् भिन्तः भिन्दन्ति भिन्द्यात् रुधिर् आवरणे भिदिर् विदारणे तस् अन्ति यात् स्वराद्रुधादेःपरो नाशब्दः तस्मानेन नलोपः चढधभेभ्यइति तङइम अतस्य धः धुटान्ततीयश्च। तृतीयइतिधस्यदः अगुणेइतिकिम् रुणद्धि भिनत्ति वा। **श्रा। लोपादेः** असभुवीत्यस्य अगुणेसार्वधातुकेपरे आदेर्लोपोभवति स्तः सन्ति तस् अन्ति अन्विलुक् अनेनादिलोपः अगुणेइतिकिम् अस्ति **अभ्यस्तानामाकारस्य** अभ्यस्तानामगुणेसार्वधातुकेपरे आकारस्यलोपोभवति जहति मिमते ओहाक्त्यागे माङ्माने अन्ति अन्ते अन्ति जुहोत्या

देधेति लुक् जक्षात्यादीनामिति द्वित्वं भृञ्हाङ्माङामिदितीत्व
म् अनेनआलोपः लोपोस्यस्नादन्तीति नलोपः एवं ददाति द
यात् दध्यात् अगुणेइतिकिम् जहाति ददाति **क्र्यादीनां
विकरणस्य** डुक्रीञ्द्रव्यविनिमये इत्यादीनां विकरणस्य अ
कारलोपोभवति अगुणेसार्वधातुकेपरे क्रीणन्ति क्रीणते
लुनंति लुनते अन्ति अन्ते नाभ्यादेः अनेनआलोपः आत्मने
चानकारादितिनलोपः लूञः पादीनांह्रस्वः अगुणेइतिकि
म् क्रीणाति लुनाति **उभयेषामीकारोव्यञ्जनादा
वदः** उभयेषामभ्यस्तानां क्र्यादिविकरणस्य च आकारस्य
ईकारोभवति व्यञ्जनादावगुणेसार्वधातुकेपरे अदः दा
संज्ञकान्वर्जयित्वा जिहीते जिहीताम् अजिहीत मिमीते
मिमीताम् अमिमीत ओहाङ् गतौ माङ् माने वर्त्तते प
ञ्चमीताम् हासनी त अन्ति लुक् द्वित्वं भृञ्हाङ्माङामि
दिति अभ्यासस्य इत्वम् अनेनाकारस्य ईत्वम् क्रीणीतः क्री
णीते क्रीणीहि मञ्जीवितमेवपणम् लुनीतः लुनीते लु
नीहि नन्दनम् तस् ते हि नाभ्यादेः अनेनाकारस्य ईत्वम्
लूनोह्रस्वः अदइतिकिम् दत्तः धत्तः दान्तु धान्तु तस् था
स् अन्ति लुक् जक्षात्यादीनामिति द्वित्वं ह्रस्वः धाञः हिनी
यचतुर्थयोरितिधस्यदः तस्य तथोश्चदधातेरितिधः अभ्य
स्तानामाकारस्येत्यालोपः अघोषेप्रथमोशिटामितितः अगुणे
इतिकिम् जहाति क्रीणाति **इकारोदरिद्रातेः** दरिद्रा
इर्गनावित्यस्य व्यञ्जनादावगुणे सार्वधातुकेपरे आका
रस्य इकारोभवति ईकारःआमः दरिद्रितः दरिद्रिमः ना

गरुस्याम् पेचतुः पेचुः शेकतुः शेकुः पचु शक अत्वस्य उस्य प
रोक्षायांचेति अगुणत्वम् द्वित्वं अनेनएत्वाभ्यासलोपौ थलि च
सेटि अनादेशादेर्धातोः केवलयोर्व्यञ्जनयोर्मध्ये यः अकारस्त
स्य थलि सेटि परे एत्वंभवति अभ्यासलोपश्च पेचिथ शेकिथ
कृसृभृवृस्तुद्रुस्रुश्रुव एवपरोक्षायामितिनियमादिट् तॄ
**फलभजत्रपश्रन्थिग्रन्थिदम्भीनां च** तॄ प्लवनतरणयोः
फलनिष्पत्तौ भज सेवायाम् त्रपूष् लज्जायाम् श्रन्थ ग्रन्थ स
न्दर्भे दम्भु दम्भे एषामकारस्य एत्वंभवति अभ्यासलोपश्च प
रोक्षायामगुणायां थलिसेटिपरे तेरतुः तेरुः तेरिथ ऋद
न्तानांचेतिगुणः फेलतुः फेलुः फेलिथ भेजतुः भेजुः भेजिथ
त्रेपे त्रेपाते त्रेपिरे श्रेथतुः श्रेथुः श्रेथिथ ग्रेथतुः ग्रेथुः ग्रेथिथ
देभतुः देभुः देभिथ श्रन्थि ग्रन्थि दम्भीनां परोक्षायामिन्धि
श्रन्थि ग्रन्थीति अत्रानुषङ्गलोपः थलि चेति थलिपरे अनुषङ्गलो
पः **नशसददवादिगुणानाम्** शसु हिंसायां दद दाने
अनयोः वकारादीनां धातूनां गुणिनां ऋदन्तगुणानांचपरो
क्षायामगुणायां थलिसेटिचपरे एत्वाभ्यासलोपौनभवतः
विशशसतुः विशशसुः विशशसिथ दददे दददाते दददि
रे ववमतुः ववमुः ववमिथ ववलतुः ववलुः ववलिथ टुव
मु उद्गिरणे वलवल्लधारणे गुणिनांयथा निपपरतुः निप
परुः निपपरिथ विददरतुः विददरुः विददरिथ दॄ पालनपू
रणयोः दृ विदारणे ऋदन्तानांचेतिगुणः **स्वरादाविवर्णो**
**वर्णान्तस्य धातोरियुवौ** इवर्णान्तस्य उवर्णान्तस्य धा
तोरि वोर्णवर्णयोर्यथा संख्यं इय् उव् इत्येतावादेशौ भव

तः अगुणेस्वरादौ प्रत्यये परे शिश्रियतुः शिश्रियुः चिक्षियतुः चि
क्षियुः चिक्रियतुः रुरुवतुः रुरुवुः लुलुवतुः लुलुवुः श्रिञ् से
वायाम् क्षि निवासगत्योः डुक्रीञ् द्रव्यविनिमये रुदानादनयो
लूञ् छेदने परोक्षाया अतुस् उस् द्विर्वे अनेन इय् उवुति
यन्ति वियन्ति स्रुवन्ति ध्रुवन्ति क्षि निवासगत्योः वीनाति आ
श्रि अजनकान्त्यसनखादनेषु ष्णुञ् स्रुतौ धात्वादेः षः सः
सैतीनन्तयोः षनि इति ज्ञापकात् ट स्पतः आन्ति आन्वि ति
यस्तृदादेरनीत्यगुणत्वम् अन्येषां लक् अनेन इयुवौ स्वरा
दावितिकिम् श्रीयात् लूयात् आधीर्यात् नामन्तानांय
सायीतिदीर्घः अगुण इतिकिम् श्रयिता लविता आस्तनी
ना इङ् अगुणः इवर्णेव र्णान्तस्येतिकिम् चक्रतुः धातो
रितिकिंकुर्वन्ति अत्र धातोर्न उकारः किन्तु विकरणस्य अ
**भ्यासस्यासवर्णे** अभ्यासस्यैौ इवर्णोवर्णौ तयोर्यथा
संख्यं इय् उव् इत्येतावादेशौ भवतः असवर्णे स्वरे परे इ
येष उवोष इयेषइच्छायां उषदाहे परोक्षा अट् उपधागुणः
द्विर्वचनं अनेन इय् उवौ इयृ ति ऋ स्रगतौ आन्ति आन्वि अ
तोन्यादेश्चेतिलक्ष्या ऋदन्त्यादीनामिति द्विर्वे अकारऋव
र्णस्येति अकारः तस्य आर्तिपिपर्त्योश्चेति इत्वम् तस्यानेन
इय् रत्वम् लोपोभ्यस्तादन्तिनइतिनलोपः असवर्ण इति
किम् ईजतुः ईजुः ऊपतुः ऊपुः यंज देवताः डुवप बीजस
न्ताने अतुस् उस् स्वपिवचीतिसंप्र इङ् उप् द्विर्वे दीर्घपर
लोपौ स्वरे इतिकिम् इयाज उवाप अट् द्विर्वपरोक्षायाम
भ्यासस्येतिसंप्र **नोर्विकरणस्य** विकरणस्य नोर्यउवर्ण

स्तस्नउव् आदेशोभवति अगुणेस्वरादौप्रत्ययेपरे आप्नुवन्ति शक्नुवन्ति आप्स्व्याप्तौ शक्लृशक्तौ लृकारः इ शादीत्यर्थः अस्ति नुः स्वादेः तस्यानेन उव् असंयुक्तस्य विकरणस्य नोर्वकारः इति वकारो वक्ष्यते इदसंयुक्त उदाहरणः नोरिति किम् कुर्वन्ति कृञ् अस्ति तनादेरुः करोतेरिति गुणः अस्योकारः सार्वधातुकेगुणेइति उत्वम् वक्ष्यते विकरणस्येति किम् नुवन्ति स्वरादावितिकिम् शक्नुयात् सप्तमीयात् अगुणेइतिकिम् शक्नवानि नुः स्वादेः गुणः **यइवर्णस्यासंयोगपूर्वस्यानेकाक्षरस्य** अनेकाक्षरस्यानेकस्वरस्य धातोर्यइवर्णः असंयोगपूर्वः यस्मात्संयोगः पूर्वोनास्ति तस्य यकारादेशो भवति अगुणेस्वरादौप्रत्ययेपरे इणुवोर्बाधः चिक्यतुः चिक्युः निन्यतुः निन्युः चिञ् चये णीञ् प्रापणे णोनः अतस्तउस् द्विर्वचनस्वः कृतद्विर्वचनस्यानेकाक्षरत्वादिवर्णस्य यत्वम् इवर्णस्यकिम् लुलुवतुः लुलुवुः असंयोगपूर्वस्य किम् शिश्रियतुः शिश्रियुः डुश्रिञ् गतिवृद्ध्योः डुशादुः डुनुबन्धादथुरित्यर्थः ओकारः त्वायोदनुबन्धादित्यर्थः अतस्तउस् शिश्रिच अभ्यासस्यादिव्यञ्जनामित्यनादिव्यञ्जनलोपः स्वरादावितिवर्णोवणान्तेतिइय् अनेकाक्षरस्येति किम् धियति धियारणे ति अस्ति तुदादेरणीत्यगुणत्वम् अगुण इतिकिम् तिनयिथ परोक्षाथल् लकारःथलिचसेटीत्यर्थः इट् इणस्य इणगमौ इयस्य स्वरादावगुणेपरे यत्वंभवति यपूज्यमाः यन्ति यन्तु अस्ति अदादेर्लुक् णकारः इतोगाअर्थः अगुणेइतिकिम् अयानि इण पञ्चमी आनिगुणः स्वरा

दाविति किम् इतः । नोर्वेकारो विकरणस्य ॥ विकरणस्य नो
र्वे उवर्णस्यास्य असंयोगपूर्वस्य वकारादेशो भवति स्वरादौ
गुणोपरि चिन्वन्ति सुन्वन्ति नोर्विकरणस्येति उवूश्रमः विकरण
स्येति किम् जुवन्ति एउसुनैतायोनः वर्तमानाञ्चान्ति अन्वि अ
दादेस्तुक् स्वरादाविवर्णोस्य असंयोगपूर्वस्येति किम् ता
भुवन्ति गथघायसंसिद्धौ । जुहोतेः सार्वधातुके ॥ जुहोता
द नयोरित्यस्य अगुणे स्वरादौ सार्वधातुके परे उवर्णस्य व
त्वं भवति जुह्वति जुह्वत् अन्ति अन्तुलोपोभ्यस्तादन्ति नइ
ति नलोपः जुहोतेरिति किम् युवन्ति आमिश्रणे पूर्वेणउव्
अगुणे इति किम् जुहवानि सार्वधातुके किम् जुहुवुः । भुवो
वोन्तः परोक्षाद्यतन्योः ॥ अगुणे इति निवृत्तं भवतेः परो
क्षाद्यतन्योः स्वरयोः परयोः वकारागमो भवति बभूव ब
भूवतुः बभूवुः अट् अतुस् उस् द्विर्वचनम् भवतेरइत्यभ्यासस्या
कारः अनेन वकारागमः अद्यतन्यां यथा अभूवन् अभूवम्
अन् अम् अद्यन्तादिः सिच् तस्य इणस्थादापिबति भूभ्यः सि
चः परस्मै इति लुक् अनेन वागमः स्वरयोरिति किं अभूव अ
भूम अद्यतनी । वम प्राग्वत्सिचो लुक् भुवः सिज्लुकीतीडभा
वः । गोहेरूदुपधायाः ॥ गुह संवरणे इत्यस्य गुणे कृते उप
धाया ऊकारो भवति गूहयति गूहन्तं प्रगूहेरन् उपधाग्र
णः अनेन ऊत्वम् । दुषेः कारिते ॥ दुषवैकृत्ये इत्यस्य उप
धाया ऊत्वं भवति कारिते परे दूषयति दूषयन्ते प्रदूषयेरन्
न ऊत्वं कारिते इति किम् दोष्टा अशुद्धावितिरूपं तवर्गस्य
वर्गेण तवर्गः उपधागुणः चित्तेवा विरागे ॥ दुषेः उपदा

याः कारिते परे ह्रस्वो वा भवति चित्तविरागे गम्यमाने चित्तं
दूषयति दोषयति वा विरक्तं संपादयतीत्यर्थः ॥ मानबन्धानां
ह्रस्वः ॥ चट चेष्टायामित्यत आरभ्य षम ष्टम वैक्लव्य इति यावत्
ये धातवः अमान्तबन्धा अधिमाबन्धाः कार्यार्थं पूर्वाचार्यैः प्र
तिज्ञाताः तेषामुपधायाः कारिते परे ह्रस्वो भवति चटयति प्र
थयति व्यथयति चट चेष्टायां प्रथ प्रख्याने व्यथ भयचलनयोः
चटमानं प्रयुङ्क्ते प्रथमानं व्यथमानं धातोश्च हेतावितीन् अ
स्योपधेति दीर्घः तस्यानेन ह्रस्वः एवं रञ्जयति मृगान् रञ्ज
रागे रञ्जन्तं प्रयुङ्क्ते इतीन् रञ्जेर्णौ मृगरमणे इति तद्वाल
वाद्नुषङ्गलोपः दीर्घे कृते जनीजृष्क्नसुरञ्जोऽमन्ताश्चेति मा
नबन्धत्वादनेन ह्रस्वः गमयति शमयति गम्लृ गतौ शमुउ
पशमे शाम्यन्तं प्रयुङ्क्ते इतीन् अस्योपधेति दीर्घः अनेन ह्र
स्वः इचि वा मानुबन्धानां इच्परे इमि उपधाया ह्रस्वो वा भ
वति अचटि अचाटि अव्यथि अव्याथि अप्रथि अप्राथि च
ट चेष्ट व्यथ भय प्रथ प्र चटमानः प्रायोजि व्यथमानः प्रथ
मानः धातोश्च हेतावितीन् अद्यतनी त अद्यात्वादि भाव
कर्मणोश्चेतीच् अस्योपधेति दीर्घः तस्यानेन वा ह्रस्वः का
रितस्यानामिद्विकरणे इति कारितलोपः इचस्तलोपः का
रित इति किम् समचाटि चैत्रेण उपधादीर्घः जनिवध्योश्च
जन जनने जनी प्रादुर्भावे इति वा हन हिंसागत्योरित्यनयो
रुपधाया ह्रस्वो भवति इचि परे अजनि अयत दीप जन बुध
पूरितायिप्यायिभ्योऽन्यतरस्यामिति कर्त्तरि भावे वा इच् अ
वधि हन हिंसागत्योः अयत इच् अद्यतन्यां चेति हनेः वधा

देषाः अस्योपधेतिदीर्घः अनेनह्रस्वः **ओदौद्भ्यां यिन्नायोस्व**
**रवत्** ओकारौकाराभ्यां परौ यिन् आयिड् इत्येतौ स्वरवद्भवतः
स्वरेपरे अव् आवौ उक्तौ नौ यिन्नायोरपि भवत इत्यर्थः यथा
संख्येमत्रनेष्यते गव्यति गव्यते नाव्यति नाव्यते गामिच्छ
त्मनइति नाम्न आत्मेच्छायां यिन् नौरिवाचरति कर्तुराथिः
सलोपश्चेति आथिः एवं नावमिच्छत्यात्मनः नौरिवाचरते ना
मिव्यञ्जनान्तादायेरादेरित्याकारलोपः आयन्तात्तेभ्यात्मने
पदं ते आवि **नाम्यन्तानां यस्यायिन्नाशीश्चेक्रीयितेष्व**
**येदीर्घः** नाम्यन्तानां धातूनां लिङ्गानां च यिणि आयौ आशि
षि यकारे चेक्रीयिते परे अन्त्यस्य दीर्घो भवति यिणि चीयते
स्तूयते आयौ अग्नीयते पटूयते चिञ् चये ष्टुञ् स्तुतौ वर्त
मानाते सार्वधातुके यण् अनेनदीर्घः अग्निरिव आचरति
पटुरिवाचरति कर्तुराथिः सलोपश्चेत्याथिः नामिव्यञ्जना
न्तादायेरादेरित्यालोपः अनेनदीर्घः अग्नीयति पटूयति यि
नि अग्निमिच्छत्यात्मनः एवं पटुनात्मेच्छायां यिन् इकार
नकारौ यिन्यवर्णस्येत्यर्थौ अनेनदीर्घः ति अवि आशीषि ची
यात् स्तूयात् आशीर्यात् दीर्घः चेक्रीयिते चेचीयते रोरू
यते अत्यर्थं चिनोति रौति यथाहुः धातोरेकस्वरादिति यङ्
वः अनेनदीर्घः द्विर्वचनाच्चेक्रीयिते नाम्यन्तानामिति किम्
चिकीर्षात् हान् कर्तुमिच्छात् धातोर्वाकर्मणः इति सन् स
रान्तानां सनीतिदीर्घः ऋदन्तस्येरगुणे इतीर् नामिनोर्वोर
कुरछुरो व्यञ्जने इतिदीर्घः कीर् द्विर्वं अभ्यासकार्यम्
चिकीर्षं रविकिरियते आशीर्यात् अस्यच लोपः येइतिकिम्

वेषीष्ट इणोऽनुपसृष्टस्य इण्गतावित्यस्य अनुपसृष्टस्य उ
पसर्गरहितस्य दीर्घो भवति यणि आशीर्यकारे च परे ईयते ईया
त् अनुपसृष्टस्येति किम् निरियते समियात् इण्गतौ निर्
सम् पूर्वो यण्याशिषोरिति किम् इयात् सममीयात् यइ
ति किम् एषीष्ट ग्रामस्वैरेण आशीरात्मनेपदं सीष्ट ऋत
ईदन्तश्चेक्रीयितयण्याशिषु ऋदन्तऋकारान्ताद्धातोर्लिङ्ग
श्च ईकारागमो भवति चेक्रीयिते यिनि आयौ च परे चेक्रीयिते
जेह्रीयते मत्यर्थं करोति दरति यथाहः अनेन ईकारागमः रव
म् द्विर्व अभ्यासकार्यम् यिनि कर्त्रीयति कर्तारमिच्छत्या
त्मनः नाम्न आत्मनेच्छायां यिन् आयौ कर्त्रीयते कर्ता इवाच
रति कर्तृरायिः सलोपश्चेत्यायिः नामिव्यञ्जनान्तादित्यायेर
लोपः इरन्यगुणे ऋकारान्ताद्धातोरगुणेऽनिचाविकरणे परे इर
कारागमो भवति आद्रियते आध्रियते स्त्रियते प्रियते दृङ् आदरे
धृङ् अवस्थाने मृङ् प्राणत्यागे दृङ् व्यायामे ते आन्वितदादेरनि
रयगुणत्वम् अनेन इकारागमः स्वरादाविवर्णोवर्णान्तस्य
धातोरिति इय् अनीति किम् अदद्वेपरोक्षा ए द्विर्वे अकारऋ
वर्णस्येति अकारः अगुणे इति किम् दरति यण्याशिषो
र्ये ऋकारान्तस्य धातोरिकारागमो भवति यणि आशीर्य
कारे च परे क्रियते क्रियात् द्रियते द्रियात् यण्याशिषोरि
ति किम् कार्यम् ऋवर्णव्यञ्जनान्ताद्ध्यण् णकार इत्संज्ञावा
र्थः इत्संज्ञावाहृद्धिः यइति किं हृषीष्ट गुणोऽर्तिसंयोगा
द्योः ऋगतिप्रापणयोः ऋस्मृगतावितिवा अनयोः सं
योगादेश्च ऋकारस्य गुणो भवति यणि आशीर्यकारे च परे

अर्य्यते स्मर्यते अर्यात् स्मर्यात् ऋगतौ स्मृचिन्तायां यङ् इतिकिम् समस्तरीष्ट संस्मरीष्ट समोगम्यच्छि इच्छि स्वृभ्य ऋविदिभ्य अपभ्य इत्यात्मनेपदम् चेक्रीयितेच अत्रेः संयोगादेस्त्र ऋकारस्यगुणो भवति चेक्रीयितेपरे अरार्यते ऋगति प्रापणयोः ऋस्वगतावितिवा कुटिलमृच्छति इयर्त्तिवा सूचि सूत्रि मूत्रि ऋट अटि अशू ऊर्णुञ् इतियङ्वाद्दः अनेनगुणः स्वरादेर्द्वितीयस्येतिर्य द्वित्वं अनादिव्यञ्जनलोपः दीर्घोनागमस्येत्यभ्यासस्यदीर्घः संयोगादेर्यथा सास्वर्यते स्वह्याद्दे अर्थस्वरति यङ्वाह्यगुणः स्वद्वित्वं अभ्यासकार्य्यं आगवदीर्घः ॥ घ्राध्मोरी घ्रागन्धोपादाने ध्मा शब्दाग्निसंयोगयोरित्येतयोरन्त्यस्य ईत्वंभवति चेक्रीयिते जेघ्रीयते देध्मीयते अत्यर्थंजिघ्रतियमति यङ्वाद्दःअनेनईत्वम् चेक्रीयितेकिम् घ्रायते ध्मायते यिन्यवर्णस्य अवर्णस्यथिनिपरे ईत्वंभवति पुत्रीयति मालीयति पुत्रमिच्छत्यात्मनःयिन् इकारनकारविट्सार्थौ अनेनईत्वम् यिनीतिकिम् शुभकाम्यति अवर्णस्येतिकिम् रायमिच्छत्यात्मनः रैयति अदेर्घस्लृसन्नद्यतन्योः अदभक्षणे इत्यस्यघस्लृआदेशो भवति सन्यद्यतन्योचपरतः लृकारःपुषादीत्यर्थः जिघत्सति अद्यसन् अत्तुमिच्छतीतिवाकोस्कृतेर्धातोर्वाकर्मणाइतिसन् अयदि पुषादिस्नूत्रेणअण् अनेनधातोर्घस्लृआदेशः सनि द्वित्वं अभ्यासकार्य्यम् सन्नद्यतन्योरितिकिम् अत्ति अत्तिलवद् अद्योघसाविदंप्रथमइतिदस्यतः वापरोक्षायाम् अदेःपरोक्षायांपरस्याञ्च स्लृआदेशोवाभवति जघास जक्षतुः जक्षुः अद अतस उ

स् घस्लृआदेशः द्विर्वे अटि उपदादीर्घः अन्यत्रगमहनजन
खनघसामुपधायाःइति उपधालोपः अघोषेष्वशिटामितिख
त्वकः शासिवसिघसीनांचेतिसस्यषः पक्षे आद आदतुः आ
दुः अस्यादेः सर्वत्रेतिदीर्घः दीर्घोमयलोपः परोक्षायामितिकि
म् अन्ना अघसता आग्मवन्तः **वेञोवयिः** वेञ्तन्तु सन्ताने इ
त्यस्य परोक्षायांपरस्यां वयिआदेशोवाभवति इकारउच्चार
णार्थः उवाय ऊयतुः ऊयुः पक्षे ऊवतुः ऊवुः वस्यान्यतरस्यां
किति इतितन्त्रान्तरात् यस्यवः ग्रहिज्येतिसंप्र अटिपरोक्षायां
मभ्यासस्येत्यभ्यासस्यसंप्र ववौ ववतुः ववुः सन्ध्यक्षरान्तानामा
कारः द्विर्वे अटग्रकारादटङौ अन्यत्रालोपोसार्वधातुके इति द्वि
र्वचनेकृतेआलोपः नवेञ्वयोर्ग्रहणेचेति संप्रसारणाभावः प
रोक्षायामितिकिम् वाता **हनेर्वधिराशिषि** हनहिंसाग
त्योरित्यस्यआशिषिपरस्यांवधिआदेशोभवति इकारउच्चा
रणार्थः वध्यात् वध्यास्ताम् वध्यासुः आशिषीतिकिम् ज
घान अट् अभ्यासाच्चेतिहस्यघः **अद्यतन्यांच** हनहिंसा
गत्योरित्यस्य अद्यतन्यांच परस्यांवधिआदेशोभवति अव
धीत् अवधिषाम् अवधिषुः अद्यतनी दिताम् अन् अनेनव
धिआदेशःसिच् इट् एकत्वेसिचइतिईट् इटश्चेतिइतिसिचो
लोपः अन उस् षत्वम् तवर्गस्यषटवर्गाट्टवर्गइतितस्यट
त्वम् सेटोवाइतिदीर्घोत्रनेष्यते **इणोगाः** इण्गतावि
त्यस्य गाआदेशोभवति अद्यतन्यांपरतः अगात् अगाता
म् अगुः आकारइदार्थः अद्यादिताम् अन् सिच् इण्स्याद
पिवतिभूभ्यः सिचःपरस्मैपदेइतिसिचोलोपः अनेनगाआदेशः

अनउस् आकारस्योसि इत्याकारलोपः अद्यतन्यामितिकिम् इ
याय अट् द्विर्वहूङ्गिः अभ्यासस्यासवर्णे इत्यभ्यासस्येयुः" इ
ङः परोक्षायाम्" इङ् अध्ययने इत्यस्य गाआदेशोभवति प
रोक्षायांपरतः अधिजगे अधिजगाते अधिजगिरे अनेनगा
आदेशः द्विर्वे आलोपोसार्वधातुके इति आलोपः **सनीणि**
**ङोर्गमिः** इणगतौ इङ् अध्ययने इत्येतयोः गमिआदेशो
भवति सनिपरे इकारउच्चारणार्थः जिगमिषति जिगमिष
तः जिगमिषंति एतुमिच्छति इच्छतः इच्छन्ति सन् अनेनग
मिआदेशः सेगमः परस्मैइतिइट् अधिजिगांसते अधिजि
गांसेते अधिजिगांसन्ते अध्येतुमिच्छतीतिसन् अनेनगमि
आदेशः हनिगमिङोसुपधायाः इत्युपधादीर्घः मनोरनुस्वा
रोधुटि इत्यनुस्वारः आतेआथे इतिच आते इत्याकारस्य इत्वं अ
कारेसत्यपरलोपः सनीतिकिम् एति अधीते अत्विलक् इ
णोयणः इङः सर्वत्रात्मने इति गुणाभावः **असेर्भूरसार्व**
**धातुके** असभुवीत्यस्य भूआदेशोभवति असार्वधातुके
परे अभूत् बभूव भविता भवितुम् भवितव्यम् असार्व
धातुके इतिकिम् अस्तिस्यात् अस्तु आसीत् सन्नस्यांअस्ते
रादेरित्यकारलोपः त्यस्त्यादिप्रत्यये अस्तेर्दिस्योः इतिईट्
अस्तेरित्यकारस्य आकारः अत्वि अदादेर्लुक् सर्वत्र **ब्रुवोव**
**चिः** ब्रूञ् व्यक्तायांवाचीत्यस्य असार्वधातुकविषयेवचि आ
देशोभवति इकारउच्चारणार्थः अवोचत् उवाच वक्ता वक्ष्या
तु वक्ष्यति अवक्ष्यत् ब्रूञ् व्यक्तायांवाचि अद्यतनी दि अने
नवचु आदेशः अस्यतिवचीत्यङ्गा अपितवचे रोड्उपधायाः

स्युपधायाऊत्वम् अटि परोक्षायामभ्यासस्योभयेषामित्यभ्यास
स्यसंप्र अन्यत्र पचिवचीतीडभावः असार्वधातुके किम् ब्रवी
ति ब्रूयात् ब्रवीत अब्रवीत् आन्विलुक् ब्रुव ईड्वचनादिरिति
ईड्गुणः यात्प्रत्यये ईड् अगुणत्वात् **चक्षिङः ख्याञ्** चक्षि
ङ् व्यक्तायां वाचि इत्यस्य ख्याञ् आदेशो भवति असार्वधातुवि
षये आख्यत् आख्यत आचख्यौ आचख्ये आख्याता २ आख्या
स्यति आख्यास्यते आख्यास्यत् आख्यास्यत आख्यतन्यामण
स्वचिख्यातिलिपिसिचिह्वः इत्यण् आलोपोऽसार्वधातुक इत्या
लोपः असार्वधातुके किम् आचष्टे आन्विलुक् स्कोः संयोगा
द्योरन्ते चेति कलोपः तवर्गस्य षटेति तस्य टः **वा परोक्षा
याम्** चक्षिङः परोक्षायां विषये ख्याञ् आदेशो वा भवति
आचख्यौ आचख्ये आचचक्षे अट् प **अजेर्वी** अज गति
क्षेपणयोरित्यस्य असार्वधातुकविषये वी आदेशो भवति
वेता वेष्यति अवेष्यत् श्वस्तनी ता भविष्यन्ती स्यति क्रिया
ति पत्तिः स्यात् अद्यतन्यादिः अनेन वी आदेशाद् गुणः षत्वम्
असार्वधातुके किम् अजति **अदादेर्लुग्विकरणस्य** अ
दादिगणपठितेभ्यो धातुभ्यः परस्य आन्विकरणस्य लुक् भ
वति द्वित्व वक्त्वयोश्च परस्मै इति द्वित्वे गुणाभावः विकरण
स्येति किम् अयते **जुहोत्यादेश्च** जुहोत्यादिगणपठिते
भ्यो धातुभ्यः परस्यान्विकरणस्य लुग्भवति जुहोति ददा
ति बिभर्ति हु दा डुदाञ् डुभृञ् धारणपोषणयोः आन्वि
तस्यानेन लुक् जुहोत्यादीनां सार्वधातुके इति द्वित्वे ह्रोजः
ह्रस्वः स्वञ्झाञ्जामित् द्वितीयचतुर्थयोरिति भस्य बः वि

कर्णस्येतिकिम् ह्रूयन्ते यणः नाम्यन्तानामिति दीर्घः बा चेक्री
यितस्य चेक्रीयितस्य वा लुग्भवति बोभवीति बोभोति अत्य
र्थं भवति इति वाक्ये कृते धातोरेकस्वरादिति यङ् प्राप्तः तस्याने
न लुक् विशेषो चलुकीति ज्ञापकात् चत्परोल्लेति द्विर्वं गुण
श्चेक्रीयित इति गुणः द्वितीयचतुर्थयोरिति भस्य बः चर्करी
तं परस्मैपदमिति वर्त्तते अत्विलुक् यङो वा इति तन्त्रान्तरा
दीइट् गुणः पक्षे बोभूयते अत्वि इणस्थादापिबति भूभ्यः
सिचः परस्मै इणु गतौ ष्ठा गतिनिवृत्तौ दा इति दासंज्ञम् रूपह
ले पिबतीति पा पाने भू सत्तायां अस्तेर्भूर्वा एभ्यः परस्य सि
चः परस्मैपदे परे लुग्भवति अगात् अस्थात् अदात् अधात् अ
पात् अभूत् अयदिसिच् तस्यानेन लुक् इणो गाः परस्मैपदे
इतिकिम् न्यधायिषाताम् अगायिषत इणु गतौ डुधाञ् दाने
निपूर्वः स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृ
शां वा चिण्वदिट् चेति इट् तस्य पक्षे इच्चावादाधिरिच्चादन्ताना
मि इआकारस्यायिः इणो गाः आयिः आत्मने चानकारादिति
नलोपः इति लुङ्प्रक्रियावलोकनप्रकरणे सप्रसार
णपादः चतुर्थः ॥ अथ डौं नाम्यन्तयोर्धातुविकरण
योर्गुणः डौं नाम्यन्तयोर्धातुविकरणयोरन्त्यस्य गुणो भ
वति तत्र स्थानेऽन्तरतम इति वचनात् इकारस्य स्थाने ए
कार उकारस्य ओकार ऋकारस्य अर् गुणो भवति चेता ने
ता स्तोता लविता कर्ता चिञ् चये णीञ् प्रापणे ष्टुञ् स्तु
तौ लूञ् छेदने डुकृञ् करणे स्वस्तमीता इट् अनेन गुणः
विकरणस्य यथा [illegible] भवति उःस्वादेः त

नादेशः अनेनगुणः छन् अभिषवे तनुविस्तारे नामिनश्चोप
धायालघोः धातोरुपधायानामिनोलघोः गुणोभवति
वेदिता मोषिता वर्तिता विद्ज्ञाने मुषस्तेये वृतुवर्तने ता
इट् अनेनगुणः देग्धा दोग्धा दिहउपचये दुहप्रपूरणे दा
देर्घइतिढस्यघः चढथभेभ्यस्तथोर्धोधइतितस्यधः धुटां
स्तृतीयस्तदर्थे इतिघस्यगः अनिचिविकरणे धातोरनि
विकरणेएव परेगुणोभवति नान्यस्मिन् जयति जिजयेति
अन्वि अनेनगुणः करोतेः डुकृञ्करणे इत्यस्यउविकरे
णेपरेगुणोभवति करोति कुरुतः कुर्वन्ति अस्योकारः सा
र्वधातुकेगुणेइत्यकारस्यउत्वम् मिदेः ञिमिदास्नेहने इ
त्यस्यविकरणेपरेगुणोभवति पूर्वेणानियमितानयोर्नप्रा
प्तः मेद्यति दिवादेर्यन् अभ्यस्तानामुसि अभ्यस्तानां
सम्बन्धीयः अनउसिजभ्यस्तविदाभ्योऽश्वइति अनउस् त
स्मिन्परेगुणोभवति द्विलबक्वत्वयोश्चपरस्मे इतिनिषेधःप्रा
प्तः अबिभयुः अजागरुः ऐयरुः ञिभीभये जागृनिद्राक्षये
ऋगतिप्रापणयोः हास्तनीअन् अदाद्यादिः अन्वि जक्षात्या
देशेतिलुक् जक्षादीनांसार्वधातुके इति भी ऋ द्विर्व
ह्रस्वः द्वितीयचतुर्थयोर्विनिमयस्य अकारऋवर्णस्य अर्ति
पिपर्त्योश्चेतिइत्वम् अभ्यासस्यासवर्णे इतिइय् स्वरादीनां
वृद्धिरादेः ऐकारः अनेनगुणः अदाद्यादिअनउस् जाग्रः
अदादेर्लुक् अभ्यस्तानामितिकिम् चिच्युः चिञ् चये परो
क्षाउस् द्वित्वं यङ्वर्णस्यासंयोगपूर्वस्यानेकाचस्येतिय
त्वम् नामिकारोपधस्यदेधौनिषेधः णकारान्तवन्ये

प्रत्ययेचेक्रीयितेचपरेगुणोनभवति नीयते लूयते सार्वधातुके
यणः अपद्यत् अयदिवकर्मादिस्वेरेणणः चेक्रीयितेयथा ने
नीयते लोलूयते बेभिद्यते नरीनृत्यते अप्रत्ययेनयति लुनाति
भिनत्ति नृत्यति यथाहुः नृतेः कृतमतोरी इतिरीआगमः अ
भ्यस्तस्यचोपधायानामिनःस्वरेगुणोनिसार्वधा
तुके अभ्यस्तसंज्ञकस्यधातोरुपधाभूतस्यनामिनोगुणोन
भवति स्वरादौगुणेनिसार्वधातुकेपरे नेनिजानि अनेनिज
म् वेविषाणि अवेविषम् णिजिर् शौचपोषणयोः विष्लृ
व्याप्तौ पञ्चमीआनि ह्यस्तनीअम् अपि जुहोत्यादीनामितिद्वि
र्वं णिजि विजिविषामित्यभ्यासस्यगुणः अनेनोपधागुणा
भावः आमिअट्डात्वादिः अभ्यस्तस्येति किं वेदानि अस्विद्
कृ उपधायाइतिः उपधायाइतिकिम् बिभराणि जिह्रयाणि
डुभृञ्धारणपोषणयोः ह्रीलज्जायाम् आनि अपि जुहो
त्यादेश्चेतिलुक् जुहोत्यादीनांसार्वधातुकेइतिद्विर्वं अभ्यास
कार्यम् भृञः भृञ्हाङ्माङामिदित्यभ्यासस्यइत्वम् स्वरेइति
किं नेनेक्ति चवर्गस्याकिः अन्यत्पूर्ववत् सार्वधातुकेइतिकि
म् ननेज अट् उपधायाइतः सनिचानिटि सनिअनिटि
अभ्यस्तस्यनामिनउपधायाःगुणोनभवति बिभित्सति बुभु
त्सते भेत्तुमिच्छति बोद्धुमिच्छति इतिवाक्येकृते सन् बुधेस्त
दीपादेर्वंढभान्तस्यधातोरितिबस्यभः जिहृक्षति ग्रहउपादा
ने ग्रहीतुमिच्छतिसन् ग्रहिस्वपिप्रच्छांसनीति संप्रसारणम
होढः इतिहस्यढः प्राग्वत् गस्यघः ग्रहगुहोःसनीतिइडभा
वः षढोःकः [obscured by watermark] यानि आनि दीतिकि

मु लुकोषिषति कुष निष्कर्षे कोषितुमिच्छतिसन् **अद्यतन्या**
**शिषोश्चात्मने** अनिटीत्येव नामिन उपधाया गुणो न भवति
अद्यतन्याशिषोः सत्वत्यस्य निटि आत्मनेपदे परे अभित्त अ
बुद्ध भिदिर् विदारणे बुध अवगमने त सिच् धुटश्च धुटीति
सिचो लोपः अनेन उपधागुणाभावः चढ्पभेभ्यस्तथोर्धोऽ
इतितस्यधः अभित्साताम् अभित्सत अभुत्साताम् अभुत्सत
अद्यतनी आताम् अन्त सिच् आत्मने चानकारादिति नलोपः
बुधेः आगवद्घस्यभः आशिषि भित्सीष्ट भुत्सीष्ट आगवद्घस्यभः अ
निटीतिकिम् अवर्तिष्ट वर्तिषीष्ट वृतु वर्तने अद्य त सिच्
आशीः सीष्ट इट् गुणः अद्यतन्याशिषोरितिकिम् भेत्स्यते भे
भोत्स्यते भविष्यन्ती स्यते स्य उपधागुणः बुधेस्तृतीयादेरिति
बस्यभः अद्योपेष्टघिटामितिदथयोस्तः **ऋदन्तानां च**
ऋदन्तानां धातूनां गुणो न भवति अद्यतन्याशिषोरात्मनेप
दे निटि परे अकृत अहृत कृषीष्ट हृषीष्ट ऋतो ह्रस्वान्न इ
टभावः ह्रस्वाच्चानिट इति सिज्लोपः अनिटीतिकिम् अ
वरिष्ट वरिषीष्ट वृङ् संभक्तौ वृञ् वरणे इति वा स्वरः तथागी
स्यग्रहक इति ऋकारोपि गृह्यते अस्तीर्ष्ट स्तीर्षीष्ट स्तृञ् आ
च्छादने अद्यतनी त सिच् आशीः सीष्ट ऋदन्तस्येरगुणे इ
इति इर् नामिनिर्वोरितिदीर्घः **स्थादोश्च** स्थागातिनिवृत्तावि
त्यस्य दासंज्ञकानां च अद्यतन्या आत्मनेपदे परे गुणोभव
ति समस्थित समस्थिषाताम् समस्थिषत अदित अदि
षाताम् अदिषत अधित अधिषाताम् अधिषत स्थागातिनि
वृत्तौ डुदाञ् दाने डुधाञ् धारणपोषणयोः अद्यतनी त आ

नाम् अन्त सिच्स्यादेरिदयतत्रामात्मनेइत्याकारस्यइत्वम् अ
टिङ्स्थाध्वानिट इतिसिज्लोपः संपूर्वः अज्ञात्वादिःसमवप्रवि
भ्यःस्थइतितिष्ठतेरात्मनेपदम् भुवःसिज्लुकि भूसत्ता
यामित्यस्यसिचोलुकिकृतेसतिगुणोनभवति अभूत् अभूता
म् अभूवन् इत्यादावपिवति भूस्थःसिचःपरस्मैइतिसिचोलु
क् भुवोवोन्तः परोक्षाद्यतन्योरित्यत्रयेवकारागमः सि
ज्लुकीतिकिम् व्यत्यभविष्ट भूसत्तायां वि अति पूर्वो अद्यतन
सिच् इट् गुणः कर्मव्यतिहारे आत्मनेपदम् सूतेःपञ्चम्या
म् षूङ् प्राणिगर्भविमोचने इत्यस्यपञ्चम्यांपरस्यांगुणोन
भवति अनुत्तमेपञ्चम्याइतिआमः सुवै सुवावहै सुवामहै
पञ्चमीआत्मने ऐ आवहै आमहै अन्विलुक् स्वरादा
विवर्णस्त्र पञ्चम्याइतिकिम् सविता स्वस्तनी ता इड्गुणः
दीधीवेव्योश्च दीधीङ् दीप्तिदेवनयोः वेवीङ् वीतिना त
ल्ये इत्येतयोर्गुणोनभवति देध्यनम् वेव्यनम् अड्ढेतिअट्
अनुकामनाकान्ताइत्यत्रादेशः यइवर्णस्यासंयोगपूर्वस्या
नेकाक्षरस्येतियत्वम् देध्ये देध्यावहै देध्यामहै वेव्ये वेव्या
वहै वेव्यामहै पञ्चमी आत्मने उ ऐ आवहै आमहै यत्वम्
रुदविदमुषांसनि रुदिर् अश्रुविमोचने विद ज्ञाने मु
षस्तेये एषांसनिपरे गुणोनभवति रुरुदिषति विविदिषति
मुमुषिषति रोदितुमिच्छति वेदितुंमोषितुं धातोर्वेतिसन् इ
ट् षत्वं सनीतिकिम् रोदिता वेदिता मोषिता नाम्यन्ता
नामनिटाम् नाम्यन्तानांधातूनां अनिटांसिड्वर्जितानांगु
णोनभवति सनिपरे चिचीषति निनीषति सुसूषति लुलू

षति चेतुमिच्छति नेतुं यवितुं लवितुं सन् पुप्लुवे: उवर्णान्त
पादिभ्यश्चेतीडभावः चिग्रहश्चेतयोः स्वरान्तानां सनि इति दीर्घः
अनिटामिति किं शीशयिषते शीङ् स्वप्ने शयितुमिच्छति सन्
इड्गुणः ए अय् शायिष इति स्थिते चापरो द्वेति द्विर्वं अनादि
व्यञ्जनलोपः **सर्वेषामात्मने सार्वधातुके उत्तमे प**
**ञ्चम्याः** सर्वेषां धातूनां विकरणानां च गुणो न भवति सार्व
धातुके आत्मनेपदे परे उत्तमे पञ्चम्याः पञ्चम्या आत्मनेप
दे उत्तमपुरुषे तु भवत्येव स्तुते स्तुवीत स्तुताम् अस्तुत स्तु
ष्व स्तवै धात्वादेः षः सः तस्मिन्निवृत्ते निमित्ताभावे नैमित्तिक
स्याप्यभावः वर्तते सप्तमी ईत पञ्चमी ताम् ह्यस्तनी त अ
द्यतनी अदादेर्लुक् स्वरादाविवर्णो इयुव् उगये उहीत उग्याम् अ
उग्य उदुप्रश्नपूरणे अन्विलुक् दादेश्चेति दस्यधः धाटिवाप
धर्मेभ्य इति तस्य धः धुडान्तृतीयश्चतुर्थे इति धस्य गः विकर
णस्य उस् ते कुर्वीत कुरुताम् अकुरुत कुरुष्व तनादेः कः क
रोतेरिति गुणः अस्य उकारः सार्वधातुके गुणः चिनुते चिन्वी
त चिनुताम् अचिनुत चिनुष्व चिनवै उः स्वादेः सप्तम्यां नोर्वकारो
विकरणस्येति वत्वम् आत्मने इति किम् एति इणागमो दोषि
पूर्ववत् ऋकारादि सार्वधातुके इति किम् चेष्यते स्तोष्यते भविष्य
न्तीस्यते दोग्धासे श्वस्तनी आत्मने· मध्यमैकवचने तासेउप
धा गुणः उत्तमे पञ्चम्या इति किम् स्तवै स्तवावहै स्तवामहै
करवै करवावहै करवामहै सुनवै सुनवावहै सुनवामहै
कुरुष्व स्तुहि कुरुष्व स्तुष्व आभिषवे धात्वादेः षः सः पञ्चमी पे
आवहै आमहै अनिलुक् कृञः तनादेः षुञः उः स्वादेः उ

णः **द्वित्वबहुत्वयोश्च परस्मै** सर्वेषां धातूनां विकरणानां च गुणो न भवति सार्वधातुकपरस्मैपदे द्वित्वबहुत्वयोश्च परयोः अतुत्तमेपञ्चम्याः तयोर्भवत्येव स्नुतः स्नुवन्ति स्नुताम् स्नुवन्तु अस्नुताम् अस्नुवन् अन्वित्वक् स्वरादाविवर्णोवर्णान्तस्य धातोरियुव् ऊर्णुतः ऊर्णुवन्ति ऊर्णुताम् ऊर्णुवन्तु और्णुताम् और्णुवन् अन्वित्वक् कुरुतः कुर्वन्ति कुरुताम् कुर्वन्तु अकुरुताम् अकुर्वन् तनादेरुरित्यादि पूर्ववत् चिनुतः चिन्वन्ति चिनुताम् चिन्वन्तु अचिनुताम् अचिन्वन् चिञ् चयने स्वादेः नोर्वकारो विकरणस्येति वत्वम् सुनुतः सुन्वन्ति सुनुताम् सुन्वन्तु असुनुताम् असुन्वन् द्वित्वबहुत्वयोरिति किम् पचति दोग्धि करोति चिनोति सार्वधातुक इति किम् सोतारौ सोतारः अतुत्तमेपञ्चम्या इति किम् स्नवाव स्नवाम दोह्वाव दोह्वाम करवाव करवाम सुनवाव सुनवाम पञ्चमी आव आम अन्वित्वक् तनादेरुः श्नु स्वादेः उदेरुपधाया गुणः अन्येषां नाम्यन्तयोरिति गुणः **परोक्षायां च** धातोर्गुणो न भवति परोक्षायां परस्मैपदे द्वित्वबहुत्वयोः परयोः चक्रतुः चक्रुः ऊहतुः ऊहुः द्वित्वबहुत्वयोरिति किम् अहं निनय उदोह णलुत्तमो वेति वृद्धिनिषेधः **सर्वत्रात्मने** धातोर्गुणो न भवति परोक्षायामात्मनेपदे सर्वत्रैकद्विबहुत्वेषु परेषु चक्रे चक्राते चक्रिरे ऊहे ऊहाते ऊहिरे **आशिषि च परस्मै** धातोराशिषि परस्मैपदे परे गुणो न भवति नीयात् लूयात् परस्मा इति किम् चेषीष्ट चिञ् चयने आशीः सीष्ट गुणः षत्वम् **सप्तम्यां च** धातोर्विकरणस्य च सप्तम्यां परस्मैपदे गुणो न भवति ... नुयात् स्नुयात् चिनुया

त् दीच दिप्रत्यये च परे धातोर्विकरणस्य च गुणो न भवति स्व
हि इंगिथ विहि पुञ् इदृश विदज्ञाप च मीढि अन्विलक दा
देर्ध्यः इष्यअर्थादेर्धिः श्रदान्तनीयस्य तर्थे इति च स्पगः स्वत्र नो
स्य विकरणादसंयोगादिति हिलोपः **तुदादेरनि** तुदादि
गणपठितानां धातूनां गुणो न भवति अनि परे तुदति तु
दति क्षियति तुद व्यथने [illegible] क्षि निवासगत्योः स्व
रादावित्वर्णो तिरिय् अनीति किम् तोत्ता क्षेतीता उपधाया गु
णः **आमि विदेरेव** विद ज्ञाने इत्यस्य आमि परे गुणो न भव
ति विदांचकार उष विद जागृभ्यो वा इत्याम् आमः कृञ् संवि
दांचक्रे समो गम्यृच्छि प्रच्छिस्वरत्यर्तिश्रुविदि[illegible]भ्य इत्यात्म
नेपदम् आमीति किं विवेद विदेरिति किम् ओषांचकार जा
गरांचकार उष दाहे जागृ निद्राक्षये जागर्तेः आम् उष उ
पधागुणः जागृतामन्त्रयोरिति गुणः **कुटादेरनिनिज**
**न्ते** कुट कौटिल्ये पुट संश्लेषणे कुच सङ्कोचे गुज शब्दे गु
ड रक्षायाम् डिप क्षेपे छुर छेदने त्रुट कलहकर्मणि छुट
छुट छेदने जड बन्धे कुड घसने कुड बाल्ये घु
ड प्रतिघाते तुड तोदने स्फुड स्फुट संवरणे उदात्ता उदात्तेतः
गुरी उद्यमे उदात्त अनुदात्तेत् णू स्तवे धू विधूनने गुवरी
चोत्सर्गे स्फुरतिस्फुलत्योश्चेति उदात्ताः कुङ् शब्दे च एते कुटादयः
एषां गुणो न भवति अनि निजन्ते इन् इच् अट् वर्जितेषु प्र
त्ययेषु परेषु इन् इच् अस्तु गुणो भवत्येवेत्यर्थः कुटिता कु
टिष्यति अकुटीत् पुटिता पुटिष्यति अपुटीत् स्फुटनी जा
स्यति अस्यजनी दि सिच् इट् ईट् इट इटीति सिचो लोपः कु

टिता कुटितं कुटितव्यम् पुटिता पुटितं पुटितव्यम् ब्रुञ्चा
वितिरट् ब्रुत्रौभोक्रियार्थां क्रियार्थायामितम् तव्यानीया
वितितव्यः भविता भुविता भविता भवनम् भुवनम् भुव
नम् युट्रेतिसूट् युवुफामनाकालाइत्यनादेशः स्वरादावि
वर्णेस्ववू अब्रवीत् अभुवीत् अभुवीत् अयदि सिच् इट्ई
ट् इटश्चे"ंटीतिसिच्लोपः आभवत् उव् अनिनिजिदिश्वतिकि
म् कोटयति कुटत्वं अयुक्तेइन् उपधायाः गुणः अकोटि अयत
भावकर्मणोश्चेतिइट् उपधायाः गुणः इवस्तलोपः अकोटअट् **वि**
**जेरिटि** ओविजी भयचलनयोरित्यस्य इटि परे गुणो न भवति
उद्विजिता उद्विजिष्यति उद्विजितम् उद्विजितव्यम् इटीतिकि
म् उद्वेजनम् युट् युवुफामित्यादेशः **वोर्णोः** ऊर्णुञ् आ
दनेइत्यस्य इटि परे गुणो वा भवति प्रोर्णविता प्रोर्णुविता गु
णः स्वरादाविस्वव् इटीतिकिम् ऊर्णोति ह्यस्तनीदि अद्रावा
दिः अन्वितक स्वरादीनां वृद्धिरादेः गुणो ह्यस्तन्यां चेति गुणः
**स्थादोरिदेयतन्यामात्मने** क्षागतिनिवृत्तावित्यस्य दा
संज्ञकानां च अद्यतन्यामात्मनेपदे परे अन्त्यस्य इत्वं भवति
समस्थित समस्थिषाताम् समस्थिषत अदित अदिषाताम्
अदिषत अधित अधिषाताम् अधिषत स्थादोश्चेत्यत्र साधि
तम् अद्यतन्यामिति किम् संस्थास्यते दास्यते धास्यते आत्म
नेइतिकिम् अस्थात् अदात् अधात् अद्यतनीदि इण्स्थादा
पिबति भूभ्य इतिसिचो लोपः **इचादेरागमो कारःस्व**
**रादेर्निविकरणे** अञ्च मोचने लसूञ्छेदने त्रिकुलाभेलि

पञ्चपदेषु विकरणे अवदात् स्वरितेतः कृतीच्छेदने छिद

परितापे पिश अवयवे एते मुचादयः एषामनि विकरणे परे स्वरात्परो नकारागमो भवति मुञ्चति लुम्पति विन्दति लिम्पति सिञ्चति कृन्तति खिन्दति पिंशति शकारेऽमनोरनुस्वारः अन्यत्र वर्गे वर्गान्तः अनि विकरण इति किम् मोक्तास्य स्लता **मस्जिनशोर्धुटि** टुमस्जो शुद्धौ णश अदर्शने अनयोर्धुटि परे स्वरात्परो नकारागमो भवति मङ्क्ता मङ्क्ष्यति अमङ्क्षीत् अनेन स्वरात्परो नकारागमः धुटां तृतीय इति सस्य दः तवर्गश्चटे इति दस्य जः अक्षिमस्जोर्धुटि इति जकारस्य लोपः चवर्गस्य किरसवर्णे इति जस्य कः वर्गे वर्गान्त इति नस्य ङः नशो धुट्येवा नंष्टा नङ्क्ष्यति अनङ्क्षीत् अनेन नागमः तस्य मनोरनुस्वारः छशोश्चेति शस्य षः षढोः कः से धुटीति किम् मज्जति नश्यति दिवादेर्यन् **रधिजभोः स्वरे** रध हिंसायाम् जभ जृभि जृम्भी गात्रविनामे अनयोः स्वरे परे स्वरात्परो नकारागमो भवति रन्धयति जम्भयति रधयत्येवं प्रयुङ्क्ते जम्भमाने इन् अनेन नागमः रन्धकः जम्भकः वुण् एनकाननाकान्त इति अकआदेशः नागमः स्वरे इति किम् रध्यते जभ्यते **नेटि रधेरपरोक्षायाम्** रध हिंसासंराध्योरित्यस्य इटि परे स्वरात्परो नकारागमो न भवति अपरोक्षायां परोक्षायां यस्य इट् तत्र भवत्येव रधिता रधिष्यति अरधिष्यत् रधितव्यम् तव्यानीयाविति तव्यः अपरोक्षायामिति किम् ररन्धिव ररन्धिम पूर्वेण नागमः **रभिलभोरविकरणपरोक्षयोः** रभ राभस्ये डुलभष् प्राप्तौ अनयोः स्वरे परे स्वरात्परो नकारागमो भवति अ

विकरणपरोक्षयोर्यः स्वरस्तं वर्जयित्वा रम्भयति रभमाणंप्रयुं
ङ्क्ते लभमानं इन् अनेन नागमः वर्ग्यवर्गान्तः अविकरणपरोक्ष
योरिति किम् रभते लभते रेभे लेभे असंयोगव्यञ्जनमध्येना
देशादेः परोक्षायामित्वाभ्यासलोपौ स्वर इति किम् रम्भ्यते
लभ्यते सार्वधातुके यण् हुश्रुभ्यां हेर्धिः हु दानादनयो
रित्यस्मात् श्रुउन्नात् परस्य हेः धिरादेशो भवति जुहुधि चका
द्धि चकास्दीप्तौ पञ्चमी हि अन्विकरणः अनेन हेर्धिः धुटां स्तृती
यश्चतुर्थे इति स्य न सावर्ण्यात् सस्य तृतीयो दः जुहोतेः जुहो
त्यादेश्चेति लुक् चकासः अदादेर्लुक् भिदिर् स्वराद्रुधादेः प
रो नशब्दः तस्य रुधादेर्विकरणान्नलोपः हेर्धिः शिण्ड्ढि पि
ण्ड्ढि शिष्लृ विशेषणे पिष्लृ संचूर्णने स्वराद्रुधादेः परो नश
ब्दः रुधादेर्विकरणान्तलोपः धुटां स्तृतीयश्चतुर्थे इति षस्य डः
तवर्गश्च टवर्गे इति नस्य णः हुश्रुभ्यामिति किम् क्रीणीहि क्री
णीहि नाक्र्यादेः उभयेषामीकारो व्यञ्जनादावितीकारः हेरि
ति किम् जुहोति अन्विकरणः अस्तेः अस भुवीत्यस्मात् परस्य हेः
धि आदेशो भवति एधि अस हि अन्विकरणः अस्तेरादेरित्यका
रलोपः दास्योरभ्यासलोपश्चेति सकारस्य एत्वम् अनेन हेर्धिः
शा च शास्तेः शासु अनुशिष्टौ इत्यस्मात् परस्य हेर्धि आदेशो
भवति शास्तेश्च शा आदेशः शाधि अन्विकरणः हेर्धिः लोपो
भ्यस्तादन्तिनः अभ्यस्तात् परस्य अन्तु इत्यस्य नकारलोपो
भवति दधति दधतु जुह्वति जुह्वतु धान् डुदान् धारणयोः
न्ति अन्ति अन्ति जुहोत्यादेश्च लुक् जुहोतेः सार्वधातुके इति उ
कारस्य वत्वम् जुह्वति जुह्वतु जुहोत्यादेश्चेति अभ्यस्तसंज्ञा

अभ्यस्तादितिकिम् यान्तियाप्रापत्ते अन्विलुक अन्तिनइति
किम् ददीरन् दा सप्तमी ईरन् अभ्यस्तानामाकारस्येत्यालो
पः आत्मनेचानकारात् आत्मनेपदयस्सः अन्तस्याद्वस्य
स्यनकारलोपोभवति अनकारात् अकारान्यरस्यतन्नभव
ति कुर्वते चिन्वते लुनते कुर्वताम् चिन्वताम् लुनताम् अ
कुर्वत अचिन्वत अलुनत अन्ते अन्ताम् अन्त तनादेशः उः
स्वादेर्नाक्र्यादेः करोतेर्गुणः असोकारःसार्वधातुकेह्रस्व
म् नोर्वकारइतिनोर्वत्वम् स्वादीनांह्रस्वः क्र्यादीनांविकरण
स्येत्यालोपः अकुर्वत अद्यतनी अन्त सिच् ऋदन्तानांचेति
गुणाभावः अनेननलोपः आत्मनेइतिकिं चिन्वन्ति लुनन्ति
अनकारादितिकिम् स्रवन्ते च्यवन्ते स्तुङ्गतौ च्युङ्गतौ अ
न्ते आन्विगुणः असन्ध्यक्षरलोपः शीङोरिदन्तेरादिः शी
ङ्स्वप्नेइत्यस्मात्परस्यान्त् इत्यस्यआदिः रेफागमोभवति इका
रउच्चारणार्थः शेरते शेरताम् अशेरत अन्ते पञ्च अन्ताम्
ह्यस्त अन्त अनेनरेफागमः शीङःसार्वधातुकेइतिगुणः अन्ते
रितिकिम् शेते शयाते ते आते वेत्तेःसंप्रतिपरस्मैवा
णादयः विदज्ञानेइत्यस्मात् परेषांसंप्रतिवर्तमानेकालेवि
हितायावर्तमानाविभक्तेः सम्बन्धिनांपरस्मैपदानांणादी
नांयथासांख्यंअट् आदय आदेशावाभवन्ति वेद विदतुःवि
दुः वेत्थ विदथुः विद वेद विद्व विद्म अनि द्वित्वबहुत्वयो
श्चेतिगुणाभावः स्थानिवदादेशइतिवचनाद्वर्तमानैवाश्रीयते
तिद्विवचनादिनास्ति पक्षे वेत्ति वित्तः विदन्ति वेत्सि वित्थः
वित्थ वेद्मि विद्वः विद्मःसंप्रतीतिकिम् विद्यात् आन्विलुक

परस्मैपदानामितिकिम् संविन्ते संविदाते संविद्रते तेन्ते झ न्ते समोगमृच्छ्यात्मनेपदम् बहुलंबचने विभाषेति रेफाग मः पक्षे संविदते आत्मनेचानकारादितिनलोपः **ब्रुवःप ञ्चानामादितआहश्च** ब्रूञ्व्यक्तायांवाचि इत्यस्माद्धा तेर्यांपञ्चानांवर्तमानावाः संबन्धिनांआदितः आदेशस्थिता नांपञ्चानांवचनानांति तस् अन्ति सिप्थस् इत्येतेषांयथा सांख्यंपञ्चवा अड्आदयअट् अतुस् उस् थल् अथुस् इत्ये तेआदेशाभवन्ति ब्रूञस्थआहिआदेशोभवति इकारउच्चा रणार्थः आह आहतुः आहुः आत्थ आहथुः थलिपोपक्षे तिहस्यथः तस्यअयोषेषाश्चिटोप्रथमइतितः पक्षे ब्रवीतिब्रू तः ब्रुवन्ति ब्रवीषिब्रूथः तिस्पोःब्रुवईड्वचनादिषुणः सर्वत्र आन्विलक पञ्चानामितिकिम् ब्रूथ **थेथश्च** ब्रूञःस्यादेशा थलिपरे कृतस्यआहि आदेशस्यान्यस्यथआदेशोभवति आ त्थसाथनेप्राप्तवत् अड्आदिथकारादन्यत्रथप्रत्ययेमभवतिब्रू थ **अकारादटऔ** आकारान्तरस्यअटऔकारादेशोभवति पपौ अटइतिकिम् पपिथपल् द्विवेउट् **ऋदन्तस्येरगु णे** धातोर्यःअन्त्यऋकारस्तस्यअगुणेप्रत्ययेपरे इर्आदे शोभवति किरति गिरति कॄविक्षेपेगृहनिगरणे अविराददे रनीयगुणत्वम् कीर्यते गीर्यते सार्वधातकेयक् अनेनऋ कारस्येर् नामिनोर्वोरितिदीर्घः अगुणेइतिकिम् करिता **उरोष्ठोपधस्यच** ओष्ठ्योपधस्यधात्वन्तस्यऋकारस्यउर् आदेशोभवति अगुणेप्रत्ययेपरे आपूर्यते आभूर्यते पृपाल नपूरणयोः भृभजने ते सार्वधातकेयक् अनेनऋकारस्यउ

र् नामिनोर्वोर्विति दीर्घः बुभूर्षति बुभूर्षति परितुमिच्छति भरितुं मिच्छति सन् ऋद्दन्तात्सनि वा इडभावः सनिवा इ ति तत्रान्तरात् अनेनउर् नामिनोर्वोर्विति दीर्घः द्विर्व अभ्यास कार्यम् सनिचानिटीति सोनत्वम् उछेपापथस्येति किम् की र्यते कृविक्षेपे ऋदन्तस्येति इर् दीर्घः अनुणोइति किम् परि ता इन्यसमानलोपोपधाया ह्रस्वश्चणि असमान लोपस्यधात्वस्यसमानोवर्णोनलुप्यते तस्यउपधाया ह्रस्वोभवति इनिचणपरेपरतः अपीपचत् अपीपठत् पच न्तंप्रायुंक्त पठन्तंप्रायुंक्त इन् असोपधेति दीर्घः दिचण् अद्यादिः सर्वविधिभ्योलोपविधिर्बलवान् इन्यादौकारि तलोपः इनिकृतंस्थानिवदिति वचनात् पच् पठ् द्विर्व अभ्यासस्यादिव्यञ्जनम् ततः प्रत्ययलोपेप्रत्ययलक्षणेन अनेनउपधाह्रस्वः अलोपेसमानस्यसन्वदिति सन्वद्भावा त्सन्यवर्णस्येति इत्वम् दीर्घोलघोः असमानलोपइतिकिम् अत्यरराजत् राजानमत्यक्रमीत् राजन्शब्दात् इन्कारितेच धात्वर्थे इति इन् इनिलिङ्गस्यानेकाक्षरस्येत्यन्त्यस्वरादिलोपः दिचण् कारितलोपादिप्राग्वत् उपधायाइति किम् अचकां क्षत् काक्षिकाङ्क्षायाम् इकारोनकारागमार्थः अनिदनुब न्धोतिज्ञापकान्नकारागमः मनोरनुस्वारोधुटीत्यनुस्वारः तस्यवर्गेवर्गान्तइतिङः काङ्क्षन्तंप्रायुंक्त इन् दिचण् प्राग्वत् चणीतिकिम् पाठयति नशास्वृदनुबन्धानाम् शा सुअनुशिष्टावित्यस्य ऋदकारानुबन्धानांधातूनां चण्परेइ निपरतः उपधायाह्रस्वोनभवति अशशासत् अरराजत्

अललोकत् अडुढौकत् अययाचत् शास्त्रस्त्राशीढौ गत्यदीर्घो
लोकृ दर्शने ढौकृ गत्यर्थः टुयाचृ याच्ञायाम् ऋकार इदर्थः
शासं ते प्रायुङ्क्त एवं राजलललोकमाने ढौकमाने याचमाने इ
न् दिचण् ढौकेः एवं इस्वः स्यादेशाद्यभ्यासस्य उकारो ह्रस्वः
**लोपः पिबतेरीच्चाभ्यासस्य** पापाने इत्यस्य इनिचणपरे प
रतः उपधाया लोपो भवति अभ्यासस्य च ईत्वम् अपीप्यत् अ
पीप्यताम् अपीप्यन् पिबन्तं प्रायुङ्क्त प्रायुङ्क्तां प्रायुङ्क्त इति
वाक्ये कृते इन् शाच्छासाह्वाव्यावेपामिनिङिति पाइत्यस्य आ
कारस्यापि दिचण् सर्वविधिभ्यो लोपविधिर्बलवानिति ने
ना इदुपधालोपः इनिकृतं स्थानिवदिति पाद्विर्वं तस्यात
न ईत्वम् **तिष्ठतेरित्** ष्ठा गतिनिवृत्तावित्यस्य इनिचणपरे
परतः उपधाया इत्वं भवति अतिष्ठिपत् धात्वादेषः सः ना
म्निस्थमिति ज्ञापकात् ठस्य थः तिष्ठन्तं प्रायुङ्क्त इन् अर्तिह्री
व्लीरीक्माय्यादन्तानामिति पागमः दिचण् कारितलोपः अ
नेन उपधाया इत्वम् इनिकृतं स्थानिवदिति स्थाद्विर्वं शिस्य
रो घोष इति सकारे निवृत्ते थ्या अघोषे प्रथमे द्वितीयचतुर्थ
योरिति थस्य तः सन्वद्भावादित्वम् निमित्तात्यये नैमित्तिकस
कारस्य षत्वं तवर्गस्य षटे नित्थस्य ठः **जिघ्रतेर्वा** घ्रा गन्धो
पादाने इत्यस्य इनिचणपरे परतः उपधाया इत्वं वा भवति अजि
घ्रिपत् जिघ्रन्तं प्रायुङ्क्त इन् आत्वन्तानां मः दिचण् कारितलो
पः अनेन उपधाया इत्वम् आद्विर्वं अभ्यासकार्यम् सन्वद्भा
वादित्वम् पक्षे अजिघ्रपत् उय समाने ह्रस्वः पाह्रस्वः अन्य
मारयन् [illegible] **[illegible]**

